**विनियुज्येत, भवेत्तदा विधिशेषत्वम् । न तु तदस्ति । मनननिदिध्यासनयोरपि श्रवणवदव-गत्यर्थत्वात् । तस्मान्न प्रतिपत्तिविधिविषयतया शास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवतीत्यतः स्वतन्त्रमेव ब्रह्म शास्त्रप्रमाणकं वेदान्तवाक्यसमन्वयादिति सिद्धम् । एवं च सति 'अथातो ब्रह्मजिज्ञासा' इति तद्विषयः पृथक्शास्त्रारम्भ उपपद्यते । प्रतिपत्तिविधिपरत्वे हि 'अथातो धर्मजिज्ञासा' इत्येवारब्धत्वान्न पृथक्शास्त्रमारभ्येत । आरभ्यमाणं चैवमा-रभ्येत—अथातः परिशिष्टधर्मजिज्ञासेति, 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' (जै०४-१-१) इतिवत् । ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति तदर्थो युक्तः शास्त्रारम्भः—'अथातो ब्रह्म-जिज्ञासा' (ब्र०सू०१-१-१) इति । तस्मादहं ब्रह्मास्मीत्येतदवसाना एव सर्वे विधयः,**

---

**वेदान्तैरवगतं ब्रह्म विधेयज्ञाने कर्मकारकत्वेन विनियुज्येत तदा विधिशेषत्वं स्यात् । न त्ववगतस्य विनियुक्तत्वमस्ति,** प्राप्ताऽवगत्या फललाभे विध्ययोगादित्यर्थः । तस्मात् । **विध्यसम्भवात् ।** अतः—**शेषत्वासम्भवात् । सत्यादिवाक्यैर्लब्धज्ञानेनाज्ञाननिवृत्तिरूपफललाभे सतीत्यर्थः । सूत्रं योजयति—** स्वतन्त्रमिति । एवं च सतीति । **चोऽवधारणे । उक्तरीत्या ब्रह्मणः स्वातन्त्र्ये सत्येव भगवतो व्यासस्य पृथक्शास्त्रकृतिर्युक्ता, धर्मविलक्षणप्रमेयलाभात् । वेदान्तानां कार्यपरत्वे तु प्रमेयाभेदान्न युक्तेरर्थः । ननु मानसधर्मविचारार्थं पृथगारम्भ इत्याशङ्क्याह—**आरभ्यमाणं चेति । **अथ बाह्य-साधनधर्मविचारानन्तरम् । अतो बाह्यधर्मस्य शुद्धिद्वारा मानसोपासनाधर्महेतुत्वात्परिशिष्टो मानसधर्मो जिज्ञास्य इति सूत्रं स्यादिति । अत्र दृष्टान्तमाह—**अथेति । **तृतीयाध्याये श्रुत्यादिभिः शेषशेषित्वनिर्णयानन्तरं**[3] **शेषिणा शेषस्य प्रयोगसम्भवात् कः क्रतुशेषः को वा पुरुषशेष इति जिज्ञास्यत इत्यर्थः ।** एवमारभ्येत । **नत्वारब्धं, तस्मादवान्तरधर्मार्थमारम्भ इत्ययुक्तमिति भावः । स्वमते सूत्रानुगुण्यमस्तीत्याह—**ब्रह्मेति । **जैमिनिना ब्रह्म न विचारितमिति तज्जिज्ञास्यत्वसूत्रणं युक्त-मित्यर्थः । वेदान्तार्थश्चेदद्वैतं तर्हि द्वैतसापेक्षविध्यादीनां का गतिरित्याशङ्क्य ज्ञानात्प्रागेव तेषां प्रामाण्यं न पश्चादित्याह—**तस्मादिति । **ज्ञानस्य प्रमेयप्रमातृबाधकत्वादित्यर्थः । ब्रह्म न कार्यशेषः,**

---

भाँति मनन और निदिध्यासन भी ब्रह्मबोध के लिए ही कहे गये हैं। यदि श्रुति से अवगत ब्रह्म का विनियोग अन्यत्र हो सकता था तो उसे विधिशेष मान सकते थे, पर बात ऐसी नहीं है। मनन और निदिध्यासन भी श्रवण की भाँति उक्तश्रुति में ब्रह्मज्ञान के लिए ही बतलाये गये हैं। अतः उपासनाविधि के विषयरूप से ब्रह्म को शास्त्रप्रमाणगम्य कहना उचित नहीं है, अपितु ब्रह्म स्वतन्त्र ही शास्त्रप्रमाणगम्य है, क्योंकि उसी में वेदान्तवाक्य का समन्वय होता है यह सिद्ध हुआ। ऐसी स्थिति में वेदव्यासजी का **'अथातो ब्रह्म-जिज्ञासा'** यह ब्रह्म-विषयक पृथक् शास्त्रारम्भ भी युक्तिसंगत होता है। उपासनाविधि के शेष मानने पर तो **'अथातो धर्मजिज्ञासा'** इस वाक्य से जब वेदार्थविचार प्रारम्भ हो गया था तो पुनः **'अथातो ब्रह्मजिज्ञासा'** इस ब्रह्मविचार-शास्त्र के पृथक् आरम्भ की आवश्यकता ही नहीं थी। यदि आरम्भ करना ही था तो **'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा'** की भाँति **'अथातः परिशिष्टधर्मजिज्ञासा'** सूत्र वेदव्यासजी को बनाना चाहिए था। जैमिनी महर्षि ने ब्रह्मात्मैक्य-बोध की प्रतिज्ञा ही नहीं की थी, उस अवशिष्ट कार्य को पूर्ण करने के लिए भगवान् वेदव्यास ने **'अथातो ब्रह्मजिज्ञासा'** इस सूत्र की पृथक् रचना की। इसलिए **'अहं ब्रह्मास्मि'** इस बोध में सभी विधियों का पर्यवसान होता है

---

१. उपासना। २. उपासना। ३. शेषिणेत्यादेः शेषस्य शेषिप्रयुक्तानुष्ठानकत्वादित्यर्थः।

**सर्वाणि चेतराणि प्रमाणानि । नह्यहेयानुपादेयाद्वैतात्मावगतौ निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्तीति । अपि चाहुः 'गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात् । सद्ब्रह्मात्माहमित्येवं बोधे कार्यं कथं भवेत् ।। अन्वेष्टव्यात्मविज्ञानात्प्राक्प्रमातृत्वमात्मनः । अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः ।। देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात्' इति ।।४।। इति चतुःसूत्रीशाङ्करभाष्यम् ।।**

तद्बोधात्प्रागेव सर्वव्यवहार इत्यत्र ब्रह्मविदां गाथामुदाहरति—अपि चेति । सदबाधितं ब्रह्म पूर्णमात्मा विषयानादत्त इति सर्वसाक्ष्यहमित्येवं बोधे जाते सति पुत्रदेहादेः सत्ताबाधनात् मायामात्रत्वनिश्चयात् पुत्रदारादिरहमिति स्वीयदुःखसुखभाक्त्वगुणयोगाद्गौणात्माभिमानस्य 'नरोऽहं कर्ता मूढः' इति मिथ्यात्माभिमानस्य च सर्वव्यवहारहेतोरसत्त्वे कार्यं विधिनिषेधादिव्यवहारः कथं भवेत्, हेत्वभावान्न कथंचिद्भवेदित्यर्थः । नन्वहं ब्रह्मेति बोधो बाधितः, अहमर्थस्य प्रमातुः ब्रह्मत्वायोगादित्याशङ्क्य प्रमातृत्वस्याज्ञानविलसितान्तःकरणतादात्म्यकृतत्वान्न बाध इत्याह—अन्वेष्टव्येति । 'य आत्मापहतपाप्मा विजरो विमृत्युर्विशोकः सोऽन्वेष्टव्यः' (छा० ८-४-१) इति श्रुतेः ज्ञातव्यपरमात्मविज्ञानात्प्रागेवाज्ञानाच्चिद्धातोरात्मनः प्रमातृत्वं, प्रमातैव ज्ञातः सन् पाप्मरागद्वेषमरणविवर्जितः परमात्मा स्यादित्यर्थः । प्रमातृत्वस्य कल्पितत्वे तदाश्रितानां प्रमाणानां प्रामाण्यं कथमित्यत आह—देहेति । यथा देहात्मत्वप्रत्ययः कल्पितो भ्रमोऽपि व्यवहाराङ्गतया मानत्वेनेष्यते वैदिकैः, तद्वल्लौकिकम[1]ध्यक्षादिकमात्मबोधावधि व्यवहारकाले बाधाभावाद् व्यावहारिकं प्रामाण्यमिष्यतां, वेदान्तानां[2] तु कालत्रयाबाध्यबोधित्वात् तत्त्वावेदकं प्रामाण्यमिति तुशब्दार्थः । आ आत्मनिश्चयात् । आ आत्मनिश्चयादित्याङ्मर्यादायाम् । प्रमातृत्वस्य कल्पितत्वेऽपि विषयाबाधात् प्रामाण्यमिति भावः ।

रामनाम्नि परे धाम्नि कृत्स्नाम्नायसमन्वयः ।
कार्यतात्पर्यबाधेन साधितः शुद्धबुद्धये ।।४।।
।। इति चतुःसूत्रीब्रह्मसूत्रभाष्यरत्नप्रभाटीका समाप्ता ।।

और सभी प्रमाण भी इसी के लिए हैं । अद्वैत आत्मा न किसी के लिए हेय है, न उपादेय ही है; ऐसे आत्मा का बोध हो जाने पर तो सभी प्रमाण निर्विषय एवं प्रमाता से हीन हो जाते हैं । अतः ब्रह्मज्ञान से पूर्व ही प्रमाण-प्रमेयादि व्यवहार होते हैं । इस सम्बन्ध में ब्रह्मज्ञानियों की गाथा उपस्थित करते हैं । ब्रह्म त्रिकालाबाधित पूर्णतत्त्व है और सोपाधिक चैतन्य आत्मा कर्ता-भोक्ता है । जब, सर्वसाक्षी ब्रह्मस्वरूप आत्मा मैं हूँ, ऐसा बोध हो गया तो पुत्रादि गौण आत्मा और देहादि मिथ्या आत्मा का बाध हो जाने से वे सब सत्य नहीं रह गये फिर भला वह कार्यशेष कैसे माना जायेगा । अतः अन्वेषण के योग्य आत्मा के साक्षात्कार से पूर्व ही आत्मा में प्रमातृत्व रहता है । जब सर्वपापादिदोष से रहित प्रमाता का साक्षात्कार हो गया तो फिर व्यवहारकाल में जैसे शरीर में आत्मप्रत्यय प्रमाणरूप से कल्पित है वैसे ही आत्मसाक्षात्कार से पूर्व यह सब लौकिक प्रमाण भी है अर्थात् देहात्मप्रत्यय कल्पित होता हुआ भी व्यवहार का अङ्ग माना जाता है वैसे ही लौकिक प्रत्यक्षादि प्रमाण भी व्यवहारकाल में व्यावहारिक दृष्टि से प्रमाण माना ही जाता है । वेद में तत्त्वावेदक प्रामाण्य है और उससे भिन्न अन्य सभी प्रमाणों में व्यावहारिक प्रामाण्य है ।।४।।

।। इति चतुःसूत्रीशाङ्करभाष्यललिताव्याख्या समाप्ता ।।

१. प्रत्यक्षादि । २. वेदानाम् । ।। इति चतुःसूत्रीभाष्यटीकागोविन्दप्रसादिनी टिप्पणी ।।